इति प्रत्याह ॥ १ ॥ का स्विदासीत्पूर्वचित्तिरिति पृच्छति । द्यौरासीत्पूर्वचित्तिरिति प्रत्याह ॥ २ ॥ अन्यतरः पृच्छत्यन्यतरः प्रत्याह ॥ ३ ॥ समानमोपपायनात् ॥ ४ ॥ यद्यश्वो न पिबेत्तं ब्रूयात्—

अग्निः पशुरासीत् । तमालभन्त । तेनायजन्त । स इमं लोकमजयद्यस्मिन्नग्निः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

वायुः पशुरासीत् । तमालभन्त । तेनायजन्त । सो ऽन्तरिक्षं लोकमजयद्यस्मिन्वायुः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

आदित्यः पशुरासीत् । तमालभन्त । तेनायजन्त । सो ऽमुं लोकमजयद्यस्मिन्नादित्यः । स ते लोको भविष्यति यदि पास्यसि । तस्मात्त्वान्तरेष्यामि यदि न पास्यसि ॥

इति ॥ ५ ॥ पर्यग्निकृतानुत्सृजन्त्यारण्यान्ग्राम्याँश्च पुरुषाँश्च ॥ ६ ॥ शामित्रायाश्वस्य नीयमानस्य पौष्णमजमग्रतो नयन्ति ॥ ७ ॥ अधस्ताद्दर्भमास्यति ॥ ८ ॥ वासो हिरण्यरुक्मे तार्प्ये[2]णाश्वँ संज्ञपयन्ति श्यामूलेन वा ॥ ९ ॥ स्पन्द्ययेतरान् ॥ १० ॥ प्राणाय स्वाहेति[3] संज्ञप्यमानेषु जुहोति ॥ ११ ॥ अम्ब्यम्बिके इति महिषीं पत्न्य उदानयन्ति ॥ १२ ॥ सव्यान्ग्रन्थान्कृत्वा नव कृत्वः पशून्प्रसव्यं परियन्ति—गणानां त्वा गणपतिँ हवामहे इति पर्यायैर्वसो ममेत्यनुषजति ॥ १३ ॥ आहमजानीति[3] महिष्यनुपरिविष्यति[4] ॥ १४ ॥ तौ सहेति[3] पादान्प्रसारयन्स्वर्गे लोके प्रोर्णुवातामित्यहतेन वाससा पादतोदशेन प्रच्छाद्य वृषा वामश्वे इति सँहितप्रजननयोः पत्नीँ यजमानो ऽनुमन्त्रयते ॥ १५ ॥ ऊर्ध्वामेनामुच्छ्रापयेति[5] महिषीं पत्न्य उदानयन्ति ॥ १६ ॥ गायत्री त्रिष्टुबिति[6] पर्यायैः सूचीभिरसिपथान्कल्पयति द्वाभ्यां द्वाभ्यामेकैका हरिणीभिर्महिषी रजताभिर्वावाता लोहमयीभिः परिवृक्त्यसंलभनायाशाल्मीपिष्टैरवलिम्पेयुः ॥ १७ ॥ वपाभिः प्रचरन्ति सह प्राजापत्यानाँ सहेतरेषाम् ॥ १८ ॥ नाश्वस्य वपा भवति ॥ १९ ॥ चन्द्रं नाम मेदः ॥ २० ॥ तदस्य वपास्थाने ॥ २१ ॥ प्रजापतये हयस्य छागस्य गोमृगस्य चन्द्रवपानां मेदस इति प्राजापत्यानाँ संप्रैषः । विश्वेभ्यो देवेभ्यश्छागानामुष्ट्राणां मेषाणाँ वपानां मेदस इतीतरेषाम् ॥ २२ ॥ अभितो वपा महिमानौ जुहोति ॥ २३ ॥ हुत्वा परिवप्यौ परिवाप्यमानाभ्याँ[1] सूकरविकर्तमश्वं निकृन्तति ॥ २४ ॥ तस्य पवमानो[1] लोहितँ श्रपयति ॥ २५ ॥ दक्षिणाकाले काममात्रा दक्षिणा ददाति ॥ २६ ॥ यदि कामान्नापयेदिषुष्टं[1] ब्राह्मणानामन्नं दद्याद्भूमिपुरुषवर्जं प्राच्यां दिश्यध्वर्यवे दक्षिणस्यां ब्रह्मणे प्रतीच्याँ होत्र उदीच्यामुद्गात्रे ॥ २७ ॥

इत्यश्वमेधे [ चतुर्थे ऽध्याये ] चतुर्थं खण्डम् ॥

1 ?

2 ? The ms पवताध्र्येणा०.

3 MS III. 12. 20.

4 Perhaps to be emended to उपसँविशति.

5 MS III. 13. 1: 168. 1.

6 MS II. 12. 21.

..........................[1] प्रात्यँ सिँहचर्मण्यभिषिञ्चन्त्यृषभचर्माध्यधि धारयन्ति—सहस्रशीर्षा पुरुषे[2] इति शतकृष्णलँ रुक्मँ शतातृण्णमुपरिष्टाद्दधाति हिरण्यगर्भ[3] इति पूर्वासाँ सप्तानां प्रथमानां पुरस्तादपानभृत इत्युपरिष्टान्मास-नामानि हुत्वा प्रातर्हस्तं[4] गृह्णाति ॥ ५ ॥ जागतान्विष्णुक्रमान्क्रामति ॥ ६ ॥ प्राजापत्यं चरुशेषं पालाशपात्रेष्वासिच्यँ मध्यतःकारिणो ऽभिषिञ्चन्ति ॥ ७ ॥ वि रक्षो वि मृधो जहीति[6] मुखँ विमृष्टे ॥ ८ ॥ प्रचरणकाल उत्तरत आहवनीयस्य वैतसे कटे ऽश्वस्यावद्यति तैजने दक्षिणतो ऽन्येषां पशूनाम् ॥ ९ ॥ पुरस्तादा-हवनीये वैतसं कटमास्तीर्य तस्मिन्प्राजापत्यान्संचिनोति प्राञ्चमश्वं प्राञ्चं तूपरं प्रत्यञ्चं गोमृगमिति ॥ १० ॥ शादं दद्भिः स्वाहावकान्दन्तमूलैः स्वाहेति[7] पर्यायै-र्द्यावापृथिवी वर्तोभ्यामित्येतस्य पुरस्तादरण्ये ऽनुवाक्येन गणेन जुहोति ॥ ११ ॥ उदुह्य[5] जांबुकं[5] पूषणं वनिष्ठुना ॥ मा नो मित्रः[10] ॥ यन्निदो अञ्जन्निति[11] त्रिभिरनुवाकैराहुती-र्जुहोति ॥ १२ ॥ द्विपदाभिरन्ततो हुत्वा स्विष्टकृतं प्रत्यश्वलोहितं जुहोति—अग्नये स्विष्टकृते स्वाहेति गोमृगकण्ठेनाश्वशफेन चरणौ ॥ १३ ॥ सर्वस्तोमो ऽतिरात्र उत्तममहः ॥ १४ ॥ ऐकादशिनानालभते ॥ १५ ॥ समानमावभृथात् ॥ १६ ॥ आवभृथके कर्मणि कृते शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षजटिलगांभवस्याव-भृथमवसृप्तस्य मूर्धनि जुहोति[13]—जम्बुकाय स्वाहा ब्रह्महत्यायै स्वाहेति ॥ १७ ॥ नव सौरीर्वशा श्वेता अनुबन्ध्याः ॥ १८ ॥ तासाँ वपासु हूयमानासु प्रतिवातं पाप-कृतस्तिष्ठेताध्वर्युः पापान्मुच्यते ॥ १९ ॥ पापाद्वासवपाश्वँ सत्वार्हं तस्मिन्साण्डं त्वाष्ट्रं सकिकिदीविविदीगयमित्युपाकरोति ॥ २० ॥ सोदवसनीये सँस्थिते पशुबन्धेन यजते ॥ २१ ॥ त्रिशाखो यूपो ऽष्टाश्रयः शाखापृथुकपालानि[5] तन्त्रँ स्वरुरपहरति[5] ॥ २२ ॥ त्वैतानां[5] प्रथमः कालकमेविवभ्रुस्तं[5] मध्यमे विशाखयूप आश्विनमालभेत ॥ २३ ॥ तयोर्द्वितीयस्तं भौमं दक्षिणार्धे ॥ २४ ॥ यस्तृती-यस्तमूर्जं उत्तरार्धे ॥ २५ ॥ पशूनां पुरोडाशमनु मृगारेष्टिं निर्वपति ॥ २६ ॥

1 The lacuna is filled up by युञ्जन्ति ब्रध्नं···अमूरजेति (III. 4. 3. 25-40). Then follows the single word प्रत्यावर्तयति. The numbering of the sūtras is wholly provisional.

2 Neither the sūkta nor the verse occur in our MS, but it may have formed a part of the Araṇyaka.

3 MS III. 12. 16: 165. 1.

4 ? The sequence of the acts is also disturbed.

5 ?

6 The formula is not derived from MS.

7 The ms adds स्विष्टकृत् इति.

8 MS III. 15. 1.

9 MS III. 15. 9.

10 MS III. 16. 1.

11 MS III. 16. 2.

12 Cp Āp XX. 21. 14.

13 The text is partly corrupt.

सहस्विष्टकृदिडं मृगारेष्टिपशुपुरोडाशानां च ॥ २७ ॥ तस्मिन्सँस्थिते द्वादश ब्रह्मौदनान्श्रपयति ॥ २८ ॥ तान्महर्त्विजः प्राश्नन्ति ॥ २९ ॥ तेभ्यो द्वादश द्वादश रुक्मान्ददाति ॥ ३० ॥ संतिष्ठते ऽश्वमेधः ॥ ३१ ॥ तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याँ[1] यो ऽश्वमेधेन यजते[2] यश्चैव देविकाप्रभृतिभिरिष्टिभिर्यजते यजते[3] ॥ ३२ ॥

इत्यश्वमेधे [ चतुर्थे ऽध्याये ] पञ्चमं खण्डम् ॥

इति चतुर्थो[4] ऽध्यायः ॥

---

1 The ms adds तरति.

2 Cp ŚatBr XIII. 3. 1. 1.

3 Instead of the second यजते the ms has: अध्यायसमाप्तौ द्विरभ्यासः श्रान्तो वाचार्यः.

4 The ms पंचमो.

